॥ अथ लक्ष्मीनारायणपंचांगम् ॥ श्रीगणेशाय नमः ॥ ॐ नमो गुरवे सरस्वतिरूपाय ॥ कैलासोत्तुंगशिखरे रत्नराजिविराजिते ॥ कल्पद्रुमवनाकीर्णे स्वर्णपाषाणमंडिते ॥ १ ॥ पद्मरागशिलामुक्तामणिमाणिक्यभूषिते ॥ वसंतकुसुमामोदगंधवाहैकवाहिने ॥ २ ॥ नवरत्नशिलाबद्धपीठस्थं परमेश्वरम् ॥ देवदेवं जगन्नाथं पार्वतीसहितं विभुम् ॥ ३ ॥ वसंतं च जपंतं च ध्यायंतं ब्रह्म शाश्वतम् ॥ पन्नगाभरणोपेतं जटामुकुटमंडितम् ॥ ४ ॥ कपालखट्वांं-

गधरं वराभयकरं परम् ॥ देवदानवयक्षेंद्रपिशा-
चोरगसेवितम् ॥ ५ ॥ गणगंधर्वसिद्धैश्च नार-
॥ १ ॥ दार्चितमव्ययम् ॥ प्रसन्नवदनं देवदेवं दृष्ट्वा म-
हेश्वरम् ॥ ६ ॥ प्रणम्योत्थाय सहसा बद्ध्वाऽञ्ज-
लिपुटं पुरः ॥ उवाच पार्वती दीना शिवं त्रैलो-
क्यनायकम् ॥ ७ ॥ श्रीदेव्युवाच ॥ भगवन्देव-
देवेश देवासुरनमस्कृत ॥ त्वं शिवः सर्वलोकेशः
सत्यः सच्चित्स्वरूपकः ॥ ८ ॥ अनंतः परमात्मे-
ति त्रिजगत्कारणं प्रभुः ॥ उद्भूतिस्थितिकृन्नित्यं ॥ १ ॥
शक्तिभिः सहितो विभुः ॥ ९ ॥ अनादिनिधनो देव-

स्त्रिगुणात्माऽपि निर्गुणः॥ किं तत्परं महत्तत्त्वं य-
ज्जपस्याद्य संततम् ॥ १० ॥ तत्तत्त्वं श्रोतुमिच्छा-
मि त्वत्तो भक्ताऽस्मि किंकरी ॥ भैरव उवाच ॥
लक्षवारं मया साध्वि वारिताऽसि पुनःपुनः॥११॥
स्त्रीस्वभावान्महादेवि पुनर्मां परिपृच्छसि ॥ भ-
क्त्याऽनया प्रसन्नोऽहं तव पार्वति तत्त्वतः ॥१२॥
एतद्रहस्यं परमं वक्ष्ये गुह्यं दिवौकसाम् ॥ अदा-
तव्यमवक्तव्यमज्ञातव्यं महेश्वरि॥ १३॥ तव स्ने-
हेन वक्ष्यामि न चाख्येयं महात्मभिः ॥ यो देव-
देवो वरदो लक्ष्मीनारायणः प्रभुः ॥ १४ ॥

सर्गस्थितिकरो लोके प्रलयांतकरो लये ॥ स
एव परमेशानि देवपन्नगरक्षसाम् ॥ १५ ॥
॥ २ ॥ दैत्यकिंनरयक्षेंद्रमनुजानलपाथसाम् ॥ ब्रह्मा-
दिकीटपर्यंतं जगत्त्रितयकारणम् ॥ १६ ॥
अध्यक्षः सात्त्विकः सत्यो भूतात्मा परमेश्वरः ॥
तस्य देवस्य पंचांगं पटलं पद्धतिः शिवे ॥ १७॥
कवचं तत्त्वभूतं च मंत्रनामसहस्रकम् ॥ स्तोत्रं
जपामि देवेशि स्मरामि मनसा सदा ॥ १८ ॥
पठाम्यहर्निशं शांतं परमानंदकारणम् ॥ ॥ २ ॥
॥ श्रीदेव्युवाच ॥ पंचांगं देवदेवस्य लक्ष्मीनारा-

यणस्य च ॥ श्रोतुमिच्छाम्यहं नाथ वक्तुमर्हसि
सांप्रतम् ॥ १९ ॥ भैरव उवाच ॥ परमार्थप्रदं
देवि पंचांगं सर्वसिद्धिदम् ॥ वक्ष्यामि परमे-
शस्य लक्ष्मीनारायणस्य ते ॥ २० ॥ तत्रादौ
पटलं वक्ष्ये मूलविद्यारहस्यकम् ॥ मंत्रोद्धारं
प्रवक्ष्यामि लक्ष्मीनारायणस्य ते ॥ २१ ॥ अष्ट-
सिद्धिप्रदं सद्यः साधकानां सुदुर्लभम् ॥ तारं प-
रं च हरितं परा लक्ष्मीस्ततोऽधिकम् ॥ २२ ॥
लक्ष्मीनारायणे देवि विश्वमंते मनुः स्मृतः ॥
नास्य विघ्नो न वा दोषो न भीतिर्न विपर्ययः ॥

॥ २३ ॥ साक्षान्मोक्षप्रदो मंत्रः सर्वार्थफलदाय-
कः ॥ वर्णलक्षपुरश्चर्यां विनाऽयं नास्त्यदोषभाक्
॥ २४ ॥ जीवहीनो यथा देही सर्व कर्मसु न
क्षमः ॥ पुरश्चरणहीनो हि न मंत्रः फलदायकः ॥
॥ २५ ॥ वर्णलक्षपुरश्चर्यां विनाऽयं नास्त्यदोष-
भाक् ॥ वनेऽरण्ये श्मशाने च शून्यागारे चतु-
ष्पथे ॥ २६ ॥ अर्द्धरात्रे च मध्याह्ने पुरश्चरणमा-
दिशेत् ॥ प्रथमं गुरुहस्तेन साधकस्य करेण वा ॥
॥ २७ ॥ ततः स्वयं चरेद्बह्निः पुरश्चर्याविधानतः॥
जपाद्दशांशतो होमस्तद्दशांशेन तर्पणम् ॥२८॥

मार्जनं तद्दशांशेन तद्दशांशेन भोजनम् ॥ विना
दशांशहोमेन न तत्फलमवाप्नुयात् ॥ २९ ॥
पंचरत्नेश्वरीं विद्यां लक्ष्मीनारायणस्य हि ॥
जपेद्वै पंचभिः सारं पुरश्चर्याफलं लभेत् ॥ ३० ॥
अथ मंत्रस्य देवेशि संस्कारविधिमाचरेत् ॥ वि-
धिना येन सद्यस्तु साधकः सिद्धिभाग्भवेत्॥ ३१॥
उत्कीलयेन्मनुं देवि ततः संजीवयेत्पुनः ॥ विद्यां
शापहरीं देवि जपेत्सद्गुरुवक्त्रतः ॥ ३२॥ सिद्धमंत्रं
जपेदंते पुनः संपुटितं चरेत् ॥ एष योगवरो मंत्रो
योगिनां दुर्लभः कलौ॥ ३३॥ अथोत्कीलनमाचक्षे

मंत्रस्यास्य महेश्वरि ॥ परार्णहरितं भूतिमानाम
सकलं पठेत् ॥ ३४॥ विश्वांते प्रणवं देवि सकृदु-
च्चारयेत्सुधीः॥मंत्रोत्कीलनमेतत्स्यात्सर्वतत्वमयं
शिवे ॥ ३५ ॥ मंत्रसंजीवनं वक्ष्ये शृणु पार्वति
सादरम्॥पराविभूतामातारं नामांते विश्वमीरि-
तम् ॥ ३६ ॥ संजीवनाख्योऽयमुक्तो मंत्रराजो
महेश्वरि॥ शिवेन वर्णितां विद्यां शापहीनां शिवे
जपेत् ॥ ३७ ॥ मोचय द्वयमुद्धृत्य परमां टद्वयं
जपेत्॥ विद्येयं दुर्लभा लोके लक्ष्मीनारायणप्रि-
या॥३८॥ वक्ष्यामि तव भक्त्याऽहं गुह्यां सर्वा-

र्थदायिनीम् ॥ तारं पराविं देवेशि ब्रह्मशापं ततः
पठेत् ॥ ३९ ॥ सिद्धमंत्रं जपेन्मंत्री पुनः संपुटितं
चरेत् ॥ संपुटस्य मनुं वक्ष्ये सर्वागमसमुद्धृतम्
॥ ४० ॥ विश्वमादौ मनुं पश्चान्नाम चांते जपेत्
प्रिये ॥ संपुटाख्यो मनुर्देवि वर्णितोऽयं फलाप्तये
॥ ४१ ॥ मंत्रस्यास्य मया देवि वर्णितोऽत्र शिवो
ऋषिः॥त्रिष्टुप्छंदो मयाऽऽख्यातो देवताऽपि समी-
रिता॥ ४२॥लक्ष्मीनारायणे देवि बीजं लक्ष्मी-
रुदीरता ॥ शक्तिः परा तथा तारं कीलकं समु-
दाहृतम् ॥ ४३ ॥भोगापवर्गसिध्यर्थं विनियोगः

प्रकीर्तितः ॥ ध्यानमस्य प्रवक्ष्यामि लक्ष्मीनारा-
यणस्य ते ॥ ४४ ॥ तारं मा भूतिबीजैस्तु षट्दी-
र्घान्तैर्महेश्वरि ॥ न्यासं कुर्यात् षडंगानि करशुद्ध्या-
दिपूर्वकम् ॥ सर्वेषां मोहनं मंत्रं वांछितैकप्रदा-
यकम् ॥ ४५ ॥ बिंदुत्रिकोणवस्वस्त्रं वृत्ताष्टदल-
मंडितम् ॥ षोडशारैरावृतं च भूग्रहेणोपशो-
भितम् ॥ ४६ ॥ लक्ष्मीनारायणस्यैतच्छ्रीचक्रं
परमार्थदम् ॥ लयांगं देवि वक्ष्यामि भोगमोक्ष-
फलप्रदम् ॥ ४७ ॥ वेदागमरहस्याढ्यं पूजाको-
टिफलप्रदम् ॥ वज्रशक्तिर्दंडखड्गपाशांकुशध्वजा-

स्ततः ॥ ४८ ॥ शूलश्चैते शिवे पूज्या बाह्यद्वारेषु सर्वदा ॥ इन्द्राग्नियममासाद्य वरुणानिलवित्तदाः ॥ ४९ ॥ सेश्वराः साधकैः पूज्या ब्रह्मानंतादयस्ततः॥ केशवं माधवं कृष्णं गोविंदं मधुसूदनम् ॥ ५० ॥ गंगाधरं शंखधरं चक्रपाणिं चतुर्भुजम् ॥ पद्मायुधं कैटभारिं घोरदंष्ट्रं जनार्दनम् ॥ ५१ ॥ वैकुंठं वामनं चैव पूजयेद्गरुडध्वजम् ॥ षोडशारेषु देवेशि वामावर्त्तेन साधकः ॥ ५२ ॥ तत्रार्चयेन्महादेवि मंत्रागुरुचतुष्टयम् ॥ असितांगं हंसकेतुं वंशीपाणिं च पूजयेत् ॥ ५३ ॥ वृत्तत्रयेषु देवेशि साध-

ल. पं. को गंधपुष्पकैः ॥ संहारं रुरुकं चंडं भूतेशं का- पट.
लभैरवम् ॥ ५४ ॥ कपालं भीषणं चैव तथा
॥ ६ ॥ श्मशानभैरवम् ॥ पूजयेत्साधकः सिद्ध्यै वसु-
पत्रे महेश्वरि ॥ ५५ ॥ विष्णुं च वासुदेवं च देवि
दामोदरं तथा ॥ नृसिंहं च महादेवि देवं संक-
र्षणं तथा ॥ ५६ ॥ त्रिविक्रमं चानिरुद्धं वि-
ष्वक्सेनं च साधकः ॥ लक्ष्मीशब्दांकितं देवि
वसुकोणेषु पूजयेत् ॥ ५७ ॥ गंगां च यमुनां
चैव न्यसेत्सरस्वतीं तथा ॥ पूजयेत्तत्र वह्निश्च ॥ ६ ॥
क्रमयोगेन पार्वति ॥५८॥ लक्ष्मीनारायणं देवं

पूजयेद्विंदुमंडले ॥ महालक्ष्मीं राजलक्ष्मीं सिद्ध-
लक्ष्मीं च पूजयेत् ॥ ५९ ॥ शंखं चक्रं गदां
पद्मं पूजयेद्विंदुमंडले ॥ गंधाक्षतप्रसूनादि गुरु-
मालाविभूषणैः ॥ ६० ॥ संपूज्यामृतकुंभस्थैर्बिं-
दुभिर्मंत्रपूजनम् ॥ तर्पयेत्साधको देवं मकारैः
पंचभिः परम् ॥ ६१ ॥ लयांगमेतदाख्यातं प्रयो-
गानष्ट पार्वति ॥ वक्ष्ये येन भवेत्सिद्धिर्मंत्रस्या-
स्य विशेषतः ॥ ६२ ॥ स्तंभनं मोहनं चैव मार-
णाकर्षणं तथा ॥ वशीकारं तथोच्चाटं शांतिकं पौ-
ष्टिकं तथा ॥ ६३ ॥ एतेषां साधनं वक्ष्ये प्रयो-

 गानां महेश्वरि ॥ एषां साधनमात्रेण मंत्रसिद्धिः 
प्रजायते॥६४॥ रवौ स्नात्वा महादेवि गत्वाऽश्व-
 त्थतरोस्तलम्॥ जपेदयुतमीशानि हुनेत्तत्र दशां-
शतः ॥ ६५ ॥ घृतमत्स्यांडगुडजान्पुष्पैरानंदमि-
श्रितैः ॥ स्तंभनं जायते सद्यो वादिवादार्कपाथ-
साम् ॥ ६६ ॥ चंद्रेऽर्द्धरात्रवेलायां गत्वा श्टंगा-
टकं सुधीः॥ दिशो बद्ध्वाऽऽसनं शोध्य प्राणायामं
विधाय च ॥ ६७॥ जपेन्मूलं हरिं ध्यात्वा हुत्वा
देवि दशांशतः ॥ घृतनागरपुन्नागकरंजकुसु- 
मानि च ॥ ६८ ॥ तर्पयित्वा दशांशेन तर्पयि-

त्वा महेश्वरि ॥ तद्भस्मना चरेद्भाले तिलकं
साधकोत्तमः ॥ ६९ ॥ त्रैलोक्यं सहसा दृष्ट्वा मो-
हमेष्यति तन्मुखम् ॥ भौमे गत्वा श्मशाने च ज-
पेद्युतसंख्यया ॥ ७० ॥ हुनेद्दशांशतो देवि स-
र्पिर्गौधूमपायसम् ॥ दूर्वापत्रं सासवं च मर्त्यश्च
म्रियते क्षणात् ॥ ७१ ॥ बुधे गत्वाऽटवीं दूरं ज-
पेत्कंफाटवे शिवे ॥ अयुतं मूलमंत्रेण हुने-
त्सर्पिर्यवाःकणाः ॥७२॥ दूर्वा पूता सपद्मा सप-
त्राणि कुसुमानि च॥ रंभाऽपि पुरतस्तस्य सद्यः प्रा-
दुर्भविष्यति ॥ ७३ ॥ गुरौ गत्वा नदीतीरं जपे-

त्तत्र दशांशतः ॥ हुनेदाज्येन मधुना शरच्चंद्रकरी-
रजैः ॥ ७४ ॥ तद्भस्मना साधितेन त्रैलोक्यं व-
शमेष्यति ॥ शुक्रेऽशोकतरुं गत्वा जपेदयुतसं-
ख्यया ॥ ७५ ॥ हुनेत्सर्पिर्नागपटं शालिचूर्णं तु
वाकलम् ॥ तर्पयेदासवाज्येक्षुरसैर्हुत्वा दशां
शतः ॥ ७६ ॥ शत्रोः शंभुसमानस्य भवेदुच्चाट-
नं ध्रुवम् ॥ शनौ गत्वा नदीतीरं जपेदयुतसंख्य
या ॥ ७७ ॥ होमो दशांशतः कार्यो घृतपायसकुं-
कुमैः ॥ सारनालैर्जंबुफलैः शांतिकं जायते क्ष- 
णात् ॥ ७८ ॥ शुभर्क्षे शुभवारे वा गत्वोपवन-

मंडलम् ॥ सोत्पलं सकलं साम्लं तव भक्त्या मयोदितम् ॥ ७९ ॥ लक्ष्मीनारायणस्येदं सर्वस्वं परमार्थदम् ॥ अदातव्यमभक्तेभ्यो दुष्टेभ्यो वीरवंदिते ॥ ८० ॥ महानीचपदस्यापि भोगदं मोक्षदं कलौ ॥ गोप्यं गुह्यतमं तत्त्वं गुह्याद्गुह्यतमं शिवे ॥ ८१ ॥ आनंदकारणं गोप्यं गोपनीयं स्वयोनिवत् ॥ ८२ ॥ ॥ ॥ ॥

श्रीसोमेश्वराय नमः ॥ अधुना देवि वक्ष्येऽहं गंधपाद्यैकरूपणीम् ॥ पद्धतिं नित्यपूजायां लक्ष्मीनारायणस्य ते ॥ १ ॥ ब्राह्मे मुहूर्ते चोत्थाय बद्ध-

पद्मासनः स्वशिरस्थसहस्राधारो मुखकमलक-
र्णिकांतर्गतनिजगुरुं श्वेतालंकारालंकृतं ध्यात्वा
मानसैरुपचारैरभ्यर्च्य तदग्रे मूलं स्वशक्त्या ज-
प्त्वा तज्जपं गुरवे समर्प्य तदाज्ञामादाय नद्यादौ
गत्वा ॐ क्लीं सर्वजनप्रियाय कामदेवाय नमः॥
इति दंतान्विशोध्य ॥ आत्मशुद्धिं कृत्वा मूलेन
मलत्रयं संशोध्य मलापकर्षणं स्नानं कृत्वा मं-
त्रस्नानं चरेत्। तत्र मृदा ॐ गंगे च यमुने चैव
गोदावरि सरस्वति॥ नर्मदे सिंधो कावेरि जले-
ऽस्मिन् संनिधिं कुरु ॥ १ ॥ इत्यंकुशमुद्रयाऽवा-

स्य मृदा ॐ मूलं। देवेश भक्तिसुलभ परिवार-
समन्वितः ॥ यावत्त्वां पूजयिष्यामि तावद्देव इ-
हावहेत्यावाहनमुद्रां प्रदर्श्य धेनुयोनिमत्स्यमु-
द्राः प्रदर्श्य मृदमंगे विलिप्य जले अस्त्रं विभाव्य
त्र्यस्रे मूलं विलिख्य तत्र मूलमुच्चरन् त्रिरुन्मज्जेत्।
तत्र सूर्यायार्घ्यत्रयं दत्त्वा ॐ ह्रीं हंसः श्रीसू-
र्याय एष तेऽर्घो नमः इत्यर्घत्रयं दत्त्वा जलात्ती-
रमारुह्य वासांसि परिधाय देहशुद्धिं विधाय
मूलेन ऋष्यादिन्यासान्विधाय मूलं यथाशक्त्या
जप्त्वा मलापकर्षणं कुर्यात्। वामहस्ते जलं गृ-

हीत्वा दक्षिणहस्तेनाच्छाद्य हं रं लं वं इति सप्तधा-
ऽभिमंत्र्य तद्गलितोदकबिंदुभिर्मूलं उच्चरन् चतुर्द-
शधा शिरः प्रोक्ष्यावशिष्टं जलं दक्षिणहस्ते धृत्वा
इडयांतं नीत्वा पापं प्रक्षाल्य तज्जलं कलुषं वा-
मनासापुटेन मही रेचयित्वा वामभागस्थशिला-
यामास्फालयेदित्यघमर्षणम् ॥ ततः पूर्ववत्
न्यासं विधाय गायत्रीं जपेत् ॥ ॐ ह्रीं लक्ष्मीना-
रायणाय विद्महे॥ ह्रौं परब्रह्म धीमहि॥ ह्रींश्रींतन्नः
परमात्मा प्रचोदयात् ॥ इति यथाशक्त्या जप्त्वा
श्रीगायत्र्या सांगाय सवाहनाय सपरिच्छदाय

सशक्तिकाय श्रीलक्ष्मीनारायणाय एष तेऽर्घो नम इत्यर्घत्रयं दत्त्वा इडयापि च षोडशभिः पवनमापूर्य चतुःषष्टिवारं ततोऽप्यधिकं वा कुंभकं कृत्वा ततः पिंगलया शनकैः शनकैर्दशभिर्दशभ्योप्यधिकं वा विरेचयेत् इति प्राणायामत्रयं विधाय ॐ ह्रीं आत्मतत्वं शोधयामि स्वाहा ॥ ॐ ह्रीं विद्यातत्वं शोधयामि स्वाहा ॐ ह्रीं शिवतत्वं शोधयामिस्वाहा ॥ इत्याचम्यपूर्ववत् सूर्यायार्घ्यत्रयं दत्त्वा देवताकवचं पठित्वा यथाशक्त्या तर्पणं कुर्यात् । मूलमुच्चार्य श्रीसांगसवाहनसपरिवारसदेवी-

को नारायणस्तृप्यतामिति त्रिवारं संतर्प्य मूलवि-
द्याक्षरमुच्चार्यैकैकांजलिना परिवारान् संतर्प्य दे-
वर्षिपितॄन्संतर्प्य पूर्ववत्सूर्यायार्घ्यं दत्त्वा संहारमुद्र
या देवताः प्रणम्य पूर्ववत्सूर्यायार्घ्यंदत्त्वा यागमंड-
पं प्रविशेदिति संध्याविधिः॥पूर्वे गं गणपतये नमः॥
दक्षिणे बं बटुकाय नमः॥पश्चिमे क्षां क्षेत्रपालाय
नमः॥ उत्तरे यां योगिनीभ्यो नमः ॥ दक्षे गं गं-
गायै नमः॥वामे यं यमुनायै नमः॥ऊर्ध्वे सं सर-
स्वत्यै नमः ॥ अधो देहल्यां अस्त्राय फट् ॥ इति ॥११॥
द्वारदेवान्संपूज्य द्वारातः प्रविश्य विहितासनउप-

विश्य मूलेन निरीक्ष्य कवचेनाभ्युक्ष्य अस्त्राय-
फडिति संताग्रपूजामंडपं संधूपितं कृत्वा ॥ विष्ट-
रशुद्धिं कारयेत् ॥ यथा ॐ आं आसनमंत्रस्य
मेरुपृष्ठऋषिः सुतलं छंदः कूर्मो देवता आसन-
शोधने विनियोगः ॥ ह्रीं पृथिव्यै नमः ॐ महि-
त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वं च
धारय मां देवि पवित्रं कुरु चासनम् ॐ आं आ-
धारशक्तिकमलासनाय नमः॥अनंताय नमः॥प-
द्माय नमः॥पद्मनाभाय नमः तत्रोपविश्य तालत्र-
यं दत्त्वा ॐ अपसर्पंतु ते भूता ये भूता भुवि संस्थि-

ता: ॥ये भूता विघ्नकर्त्तारस्ते नश्यंतु शिवाज्ञया ॥
वामपार्ष्णिघातत्रयेण विघ्नानुत्सार्य नाराचमुद्रां
प्रदर्शयेदित्यासनं संशोध्य गुरुं प्रणमेत् ॥ अखं-
डमंडलाकारं व्याप्तं येन चराचरम्॥तत्पदं दर्शितं
येन तस्मै श्रीगुरवे नमः ॥ॐ गुरुभ्यो नमः॥ प-
रमगुरुभ्यो नमः॥ परात्परगुरुभ्यो नमः ॥ परमे-
ष्ठिगुरुभ्यो नमः इति शिरसि संपूज्य देवं प्रणम्य
ॐ ह्रीमित्याकुंचेन सुषुम्णावर्त्मना वा प्रदीपक-
लिकाकारं ब्रह्मपथांतर्नीत्वा परमशिवेन संयोज्य
तयोरैक्यं विभाव्य तद्भूतामृतधारया गुरुसंतर्प्य

पुनस्तेनैव मार्गेण डाकिन्यादिशक्तीः प्रीणयंतीं कुण्डलिनीं स्वपदं प्रापयित्वा वामकुक्षौ पापपुरुषं अंगुष्ठमात्राकारं धूम्रवर्णं ध्यात्वा यंरंलंवं इति-शोषणदाहनाप्लावनोत्पादनानि कुर्यात् ॥ यं वा-युबीजेन षोडशधा जप्तेन शोषयेत् ॥ रं वह्निबी-जेन चतुःषष्ट्या जप्तेन दाहयेत् ॥ वं वरुणबीजेन द्वात्रिंशद्वारजप्तेन प्लावयेत् ॥ लं इतिबीजेन दश-धा जप्तेन शरीरं पिंडीभूतं विधाय प्राणप्रतिष्ठां कुर्यादिति भूतशुद्धिः ॥ ॐ ह्रींक्रोंयंरंलंवंशंषंसंहं-सोहंहंसः मम प्राणा इह प्राणाः मम जीव इह

स्थितः १६ मम सर्वाणींद्रियाणि मम वाङ्मन-
स्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणप्राणाइहैवागत्य सुखं
चिरं तिष्ठंतु स्वाहा ॥ इति प्राणप्रतिष्ठाक्रमः ॥ प्रा-
णान्समर्प्य प्राणायामत्रयं विधाय पूर्ववदाचम्य
संकल्पपूर्वकन्यासं कुर्यात् ॥ अस्य श्रीलक्ष्मीना-
रायणपूजामंत्रस्य शिव ऋषिः ॥ त्रिष्टुप्छंदः ॥
श्रीलक्ष्मीनारायणो देवता ॥ श्रीं बीजं । ह्रीं शक्तिः ।
ह्रीं ॐ ह्रीं कीलकं । भोगापवर्गसिद्ध्यर्थं लक्ष्मी-
नारायणपूजायां विनियोगः ॥ शिवऋषये नमः
शिरसि ॥ त्रिष्टुप्छंदसे नमो मुखे ॥ लक्ष्मीनारा-

यणदेवतायै नमो हृदि ॥ श्रीबीजाय नमो गुह्ये ॥ ह्रीं शक्तये नमः पादयोः ॥ ॐ कीलकाय नमः सर्वांगेषु ॥ इति विन्यस्य षडंगादिन्यासान् कुर्यात् ॐ ह्रां श्रां अंगुष्ठाभ्यां नमः ॥ ॐ ह्रीं श्रीं तर्जनीभ्यां नमः ॥ ॐ ह्रूं श्रूं मध्यमाभ्यां नमः ॥ ॐ ह्रैं श्रैं अनामिकाभ्यां नमः ॥ ॐ ह्रौं श्रौं कनिष्ठिकाभ्यां नमः॥ ॐ ह्रः श्रः करतलकरपृष्ठाभ्यां नमः ॥ अथ षडंगन्यासाः ॥ ॐ ह्रां श्रां हृदयाय नमः ॥ ॐ ह्रीं श्रीं शिरसे स्वाहा ॥ ॐ ह्रूं श्रूं शिखायै वषट् ॥ ॐ ह्रैं श्रैं कवचाय हुं ॥ ॐ ह्रौं श्रौं

नेत्रत्रयाय वौषट् ॥ ॐ ह्रः श्रः अस्त्राय फट् ॥
अथ करशुद्धिः ॥ ॐ कामपीठाय नमः अंगुष्ठ-
हृदययोः ॥ ह्रीं जालंधरपीठायनमः तर्जनीशिर-
सोः ॥ ॐ ह्रौं पूर्णपीठाय नमः मध्यमाशिख-
योः ॥ ॐ वाराणसीपीठाय नमो नेत्रेभ्यो वौषट्
कनिष्ठिकयोः ॥ ॐ ह्रीं मधुपुरीपीठाय नमः
कवचाय हुं अनामिकयोः ॥ ॐ ह्रौं अवंतीपी
ठाय नमो अस्त्रायफट् करतलकरपृष्ठयोः ॥ इति-
करशुद्धिः ॥ अं आं इं ईं उं ऊं ऋं ॠं वामपादा-
दिगुल्फांतम् ॥ लृं लॄं एं ऐं ओं औं अं अः दक्ष-

पादादिगुल्फांतं । कं खं गं घं ङं गुल्फादिवामपा-
दमूलांतं ॥ चं छं जं झं ञं गुल्फादिदक्षिणपादमू-
लांतं । टं ठं डं ढं णं नाभ्यादिवामबाहुमूलांतं । तं
थं दं धं नं नाभ्यादिदक्षिणबाहुमूलांतं ।
पं फं बं भं मं नाभ्यादिशिरः पर्यंतं । यं रं लं वं
स्कंधादिवामकर्णांतं । शं षं सं हं स्कंधादिदक्षिण-
कर्णांतं ॥ ळंक्षः शिरसः पादपर्यंतं इतिव्यापयेत् ॥
अं कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः ॥ इं चं
छं जं झं ञं ईं तर्जनीभ्यां नमः ॥ उं टं ठं डं ढं णं
ऊं मध्यमाभ्यां नमः ॥ एं तं थं दं धं नं ऐं अना-

 मिकाभ्यां नमः ॥ ओं पं फं बं भं मं औं कनिष्ठि- 
काभ्यां नमः ॥ अं यं रं लं वं शं षं सं हं ळं क्षः
 अः इति करतलकरपृष्ठाभ्यां नमः ॥ इति करादि-
न्यासः ॥ एवं षडंगादिन्यासः ॥ अथमातृकान्या-
सः॥ अं नमः शिरसि॥ आं नमो मुखवृत्ते॥ इं नमो
दक्षिणनेत्रे॥ ईं नमो वामनेत्रे॥ ऊं नमो दक्षिणना-
सापुटे॥ ॠं नमो वामनासापुटे॥ ऌं नमो दक्षिणगं-
डे॥ ॡं नमो वामगंडे॥ एं नमो ऊर्ध्वौष्ठे॥ ऐं नमो
अधरोष्ठे॥ ओं नमो ऊर्ध्वदंतपंक्तौ॥ औं नमो अ- 
धोदंतपंक्तौ॥ अं नमः जिह्वामूले॥ अः नमः कंठे॥

कं खं गं घं ङं नमः दक्षिणबाहुसंधिषु ॥ चं छं जं झं ञं नमो वामबाहुसंधिषु ॥ टं ठं डं ढं णं नमो दक्षिणपादसंधिषु ॥ तं थं दं धं नं नमो वामपादसंधिषु ॥ पं नमो दक्षिणपार्श्वे ॥ फं नमो वामपार्श्वे ॥ बं नमो पृष्ठे ॥ भं नमो नाभौ ॥ मं नमो जठरे ॥ यं नमो हृदि ॥ रं नमो दक्षिणांसे ॥ लं नमो ककुदि ॥ वं नमः वामांसे ॥ शं नमः हृदयादिदक्षिणहस्ताग्रांतं ॥ षं नमो वामहस्ताग्रांतं ॥ सं नमो हृदयादिदक्षिणपादाग्रांतं ॥ हं नमो हृदयादिवामपादाग्रांतं ॥ ळं नमो पादादिशिरःपर्यंतं ॥ क्षं नमो

शिरसःपादपर्यंतं॥ इतिव्यापयेत् ॥ ततः अंआंअं
इति क्षांतं न्यसेत्॥ अंह्रींअंनमः इति क्षांतं मातृ-
कास्थानेषु न्यसेत्॥ अंह्रौंअं क्षांतं मातृकास्थानेषु
न्यसेत्॥ अंह्रींअं क्षांतं न्यसेत् ॥ केवलं मातृका-
स्थानेषु मूलं न्यसेदिति षोढा न्यासं विधाय
मूलमुच्चरन् देहशुद्धिं कृत्वा घटपूजां कुर्यात् ॥
तत्र सामान्यार्घ्यं दत्त्वा स्ववामे बिंदुषट्कोणवृत्तं
चतुरस्रं विलिख्य तत्र अं पीठेभ्यो नमः इत्य-
भ्यर्च्य तत्र क्षालितं साधारं संस्थाप्य । शंभु-
नाथ यथा देवि विष्णुना च यथा पुरा ॥ ब्रह्मणा

च यथा पूर्वं तथा त्वां स्थापयाम्यहम् ॥ इति सं-
स्थाप्य अं अर्कमंडलाय द्वादशकलात्मने नमः
इति गंधपुष्पैरभ्यर्च्य मूलविलोममातृकया पर-
मामृतेनापूर्य्य सौः सोममंडलाय शोडषकलात्म-
ने नमः इति संपूज्य अस्त्रायफडिति कुले द्रव्यं
संताग्रमूलमुच्चरन्नासया त्रिःसंगृह्य तत्र त्रिकोणं
विलिख्य मूलं त्रिरिष्ट्वा मूलेन प्रपूज्य ॥ ॐ ह्रां ह्रीं
ह्रूं ह्रैं ह्रौं ह्रः सुधे कृष्णाशापं विमोचय २ अमृतं
श्रावय २ स्वाहा ॥ इति द्रव्योपरि दशधा संज-
प्य ॥ सूर्यमंडलसंभूते वरुणालयसंभवे ॥ अमा-

बीजमये देवि शुक्रशापं विमोचय ॥ देवानां प्र-
णवो बीजं ब्रह्मानंदमयं यदि ॥ तेन सत्येन ते देवि
ब्रह्महत्यां व्यपोहतु ॥ पवमानः परानंदः पवमानः
परो रसः॥ पवमानं परं ज्ञानं तेन ते पावयाम्यहम्॥
इति जपित्वा कृष्णशापं त्रिवारं जप्त्वा अंआंइंई
अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं श्रावय
२ आंह्रीं अमृतेश्वर्यै नमः इति द्रव्योपरि दशधा
जप्त्वा आनंदभैरवभैरव्यौ ध्यात्वा॥हं सक्षमलव-
लउं आनंदभैरवाय वौषट् इति दशधा जपेत्॥अंहं
सक्षमलवरुउं स्वधादिव्यै वौषट् इति द्रव्योपरि

दशधा जप्त्वा तत्र त्रिकोणं विलिख्य। गंगे च यमुने चैव गोदावरि सरस्वति॥ नर्मदे सिंधो कावेरि जलेऽस्मिन्संनिधिं कुरु॥ इति तीर्थमावाह्य अकारादिषोडश ककारादि तत्र हं ळं क्षं विलिख्य मूलं दशधा जप्त्वा गंधपुष्पदूर्वाक्षतैः संपूज्य मीनमुद्रादिना शोधयेदिति द्रव्यशुद्धिः॥ मीनोपरि धेनुयोनिमत्स्यमुद्राः प्रदर्श्य। त्र्यंबकं यजामहे सुगंधिं परिपोषणम्॥ उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात् इति मूलं त्रिवारं जप्त्वा मीनं शोधयेत्॥ इति

 मीनशुद्धिः॥मांसोपरि मुद्रात्रयं प्रदर्श्य। प्रतद्विष्णुः 
स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः॥ यस्यो-
 रुषु त्रिषु विक्रमणेष्वधिक्षियंति भुवनानि विश्वा॥
मूलं त्रिर्जप्त्वा शोधयेदिति मांसशुद्धिः॥ मुद्रोपरि
मुद्रात्रयं प्रदर्श्य। तद्विष्णोः परमं पदं सदा पश्यंति
सूरयः॥ दिवीव चक्षुराततम्॥ तद्विप्रासो विपन्य-
वो जागृवांसः समिंधते॥ विष्णोर्यत् परमं पदम्॥
इति मूलं त्रिर्जप्त्वा मुद्राखंडमीनमांसादीन् घटे नि-
क्षिप्य चतुरस्रं विलिख्य स्ववामे सारणं पात्रं गुरो- 

रग्रे संस्थाप्य कुलामृतेनापूर्य घृतमधुशर्करादिम-

धुपर्कैण पात्रं पूरयेत्।ततो योगपीठपूजां कुर्यात्॥
ॐबिंदुविभूषणत्रिकोणविराजमानवसुकोणचि-
डीतमासुदलविराजितं षोडशखचितवृत्तत्रयसं-
षिच्चतुरस्रंश्रीयंत्रराजंविलिख्य प्रक्षाल्य श्रीस्वर्ण-
पीठादौ निवेश्य हृदि सदेविकं देवं मानसैरुपचारै-
रभ्यर्च्य बाह्यपूजां कुर्यात्॥ तत्र ॐ अं ह्रीं मंडका-
यनमः २॥ कालाग्निरुद्रायनमः ॥ मूलप्रकृत्यैन-
मः॥ आधारशक्त्येनमः२॥ कूर्मायनमः२॥अनं-
तायनमः२॥ वराहाय नमः२॥पृथिव्यै नमः२॥ सु-
धार्णवाय नमः २॥ अष्टदिक्षु नवरत्नखंडेभ्यो न-

मः॥ सुवर्णपर्वताय नमः॥ नंदनोद्यानाय नमः २॥
कल्पवनाय नमः २ पद्मयोनये नमः ॥ चित्रर-
त्नखचितभूमिकाय नमः २ चिंतामणिमंडपाय
नमः २ नवरत्नमेदिकायै नमः २ रत्नसिंहास-
नाय नमः ॐ ह्रीं उच्चैः श्वेतछत्राय नमः॥ पूर्वादि-
दिक्षु ॐ ह्रीं ह्सौं वैराग्यैश्वर्येभ्यो नमः ॥ विदिक्षु
ॐ ह्रीं अधर्मअज्ञानअवैराग्यअनैश्वर्येभ्यो
नमः ॥२ सं सत्वाय नमः २ रं रजसे नमः २। तं त-
मसे नमः २ तं तत्वेभ्यो नमः॥ ॐ ह्रीं ह्सौं मंत्रव-
र्णभूषितकर्णकाय नमः ॥ २ प्रकृतिमयपत्रेभ्यो


॥१९॥

नमः ॥ २ विकृतिमयकेसरभ्यो नमः २ गरु-
डाय नमः २ पंचाशद्वर्णभूषितपद्मासनाय नमः॥
मूलं सर्वतत्वात्मकाय श्रीयोगपीठाय नमः॥ इ-
ति संपूज्य देवं ध्यात्वा त्रिखंडां पुष्पगर्भितामञ्जलिं
बध्द्वा। देवेश भक्तिसुलभ परिवारसमन्वितम् ॥
यावत्त्वां पूजयिष्यामि तावद्देव इहावहेति ॥ पु-
ष्पांजलिं क्षिप्त्वा आवाहनादिका मुद्राः प्रदर्श्य
मूलं सांग सदेवीक श्रीलक्ष्मीनारायणदेव इहा-
गच्छ २॥ इह संतिष्ठ २ इह संनिधत्स्व॥ मूलं ॐ
ह्रीं ह्सौं आं ह्रीं क्रौं हंसः लक्ष्मीनारायणप्राणा

इह प्राणाः लक्ष्मीनारायणजीवमांससंश्रि-
ताः लक्ष्मीनारायणसर्वेंद्रियाणिवाङ्मनस्त्व-
क्चक्षुश्श्रोत्रजिह्वाघ्राणप्राणा इहैवागत्य सुखं
चिरं तिष्ठंतु स्वाहा॥ इति लेलिहानमुद्रया प्रा-
णान् दत्त्वा मूलेन सदेवीकलक्ष्मीनारायण
इदमासनमास्यतां मूलविद्ययोपाद्याचमनी-
यतांबूलछत्रचामरार्तिकान्नैवेद्यादीन्निवेद्य प्र-
णम्य मूलेन कलशामृतेन तत्वमुद्रया सांगं सवा-
हनं सायुधं सपरिच्छदं लक्ष्मीनारायणं पूजया-
मि तर्पयामि नमः॥ इति त्रिःसंतर्प्य देवताज्ञा-

मादाय परिवारदेवताः पूजयेत्॥पुष्पांजलिं दत्त्वा।
मूलं महालक्ष्मीश्रीपादुकां पूजयामि तर्पयामि
नमः॥ मूलं राज्यलक्ष्मीश्रीपा० ॥ मूलं सिद्ध-
लक्ष्मीश्रीपा० ॥ इति बिंदुप्रथमावरणम् ॥ ॐ
ह्रीं ह्सौं गं गंगाश्रीपा० ॥ ३ यं यमुनाश्रीपा० ॥
३ सं सरस्वतीश्रीपा० ३ इति त्र्यस्रे द्वितीयावर-
णम् ॥ ॐ ह्रीं ह्सौं शंखश्रीपा० . ३ चक्रश्रीपा०
३ गदाश्रीपा० ३ पद्मश्रीपादुकां पूज० इति
तृतीयावरणम्॥ मूलं लक्ष्मीश्रीविष्णुश्रीपा०।मूलं
लक्ष्मीवासुदेवश्रीपा० मूलं लक्ष्मीदामोदरश्री-

पाद०। मूलं लक्ष्मीत्रिविक्रमश्रीपा०३। मूलं ल-
क्ष्मीअनिरुद्धश्रीपा० ३ मूलं लक्ष्मीविषक्सेन-
श्रीपा० ३ लक्ष्मीशब्दं प्रथमं प्रोच्चार्य सुकोणे
चतुर्थावरणम् ॥ ॐ ह्रीं ह्सौं महाभैरवश्रीपा० ३
रुरुभैरवश्रीपा० ३ चंडभैरवश्रीपा० ३ भूतेशभै-
रवश्रीपा० ३ कालभैरवश्रीपा० ३ भीषणभैरव-
श्रीपा० ३ श्मशानभैरवश्रीपा० इत्यष्टदलेषु पंच-
मावरणम् ३ ॥ असितांगभैरवश्रीपा० ३ हंस-
केतुभैरवश्रीपादुकां पूजयामि० ३ वंशीपाणि-
श्रीपादुकांपू० ३ गुरुश्रीपादुकां पूज० ३ परमगु-

रुश्रीपा० ३ परमेष्ठिगुरुश्रीपा० ३ इतिवायव्या-
दिईशानांतवृत्तयेषष्ठावरणम् ३॥केशवश्रीपा०३
माधवश्रीपा० ३ कृष्णश्रीपा० ३ गोविंदश्री-
पा० ३ मधुसूदनश्रीपा० ३ गदाधरश्रीपा० ३
शंखपाणिश्रीपा० ३ चक्रपाणिश्रीपा० ३ च-
तुर्भुजश्रीपा० ३ पद्मायुधश्रीपा० ३ कैटभा-
रिश्रीपा० ३ घोरदंष्ट्रश्रीपा० ३ जनार्दनश्री-
पा० ३ वैकुंठश्रीपा० ३ वामनश्रीपा० ३ ग-
रुडध्वजश्रीपा० ३ इति षोडशदलेषु सप्तमावर-
णम् ॥ लं इंद्रश्रीपा०३ रं अग्निश्रीपा०३ यं यम-

श्रीपा०३ क्षं निर्ऋतिश्रीपा० ३ वंवरुणश्रीपा०
यंवायुश्रीपा०३संसोमश्रीपा०३क्षंईशानश्रीपा०
अं अनंतश्रीपा०३ह्रीं ब्रह्मश्रीपा०३इत्यभ्यर्च्य च-
तुरस्रे अष्टमावरणम्३वज्रश्रीपा०३शक्तिश्रीपा०
३दंड श्रीपा०३खड्गश्रीपा०३पाशश्रीपा०३यष्टि-
श्रीपा० ३ ध्वजश्रीपा० ३ शूलश्रीपा० इतिबा-
ह्यद्वारचक्रेषु नवमावरणम्॥ मूलं त्रिरुच्चार्य सांगं
सवाहनं सायुधं सपरिच्छदं सलक्ष्मीनारायणम्
देवं पूजयामि तर्पयामि नमः॥इति संतर्प्य योनि-
मुद्राया: प्रणमेत्॥इति दशमावरणम्॥ततः पुन-

नैवेद्याचमनीयच्छत्रतांबूलादीन्निवेद्य देवाग्रे मालां मूलेन संपूज्य यथाशक्त्या मूलं जप्त्वा गुह्यातिगुह्यगोप्त्री त्वं चेति जप्त्वा देवाय जपं समर्प्य तदग्रे कवचसहस्रनामस्तवपाठं कृत्वा तदपि देवीदेवयोः समर्प्य सहसाधकैः साधकः पात्रवंदनं कुर्यात् ॥ यावन्न चलते दृष्टिर्यावन्न चलते मनः ॥ तावत्पानं प्रकर्त्तव्यं पशुपात्रमतःपरम् ॥इति पूर्णपात्रं हुत्वा शांतिस्तोत्राणि पठित्वा पुष्पांजलिं दत्त्वा नासया पुष्पमाघ्राय अंजलिं बद्धा सदेवीकं देवं प्रार्थयि-

त्वा पुनर्हृत्कमलमानीय स्वयमपि लक्ष्मीनाराय-
णनित्यपूजापद्धतिविहितविग्रहो भूत्वा ब्राह्यतः
वैष्णवाचारपरायणःसुखं विहरेत्॥इति संहारमुद्र-
या प्रणमेत् ॥ इति श्रीदेवदेवस्य लक्ष्मीनारायण-
स्य ते ॥ पद्धतिं नित्यपूजायां वर्णितां गोपितां
कुरु ॥ गुह्यं गोप्यमिदं तत्वं पूजासारं महेश्वरि ॥
गोपयेद्वैष्णवः सत्यमित्याज्ञा परमेश्वरि ॥ इति
श्रीरुद्रयामले देवीरहस्ये तंत्रे लक्ष्मीनारायणनि-
त्यपूजापद्धतिवर्णनं नाम सप्तत्रिंशः पटलः ॥ ॥२३॥
॥ श्रीशाय नमः ॥ अधुना देवि वक्ष्यामि लक्ष्मीना-

रायणस्य ते ॥ कवचं मंत्रगर्भं च वज्रपंजरकाम्य-
या ॥ १ ॥ श्रीवज्रपंजरं नाम कवचं परमाद्भुतम् ॥
रहस्यं सर्वदेवानां साधकानां विशेषतः ॥ २ ॥
यद्धृत्वा भगवान् देवः प्रसीदति परः पुमान् ॥ य-
स्य धारणमात्रेण ब्रह्मा लोकपितामहः ॥ ३ ॥ ई-
श्वरोऽहं शिवो भीमो वासवोऽपि दिवस्पतिः ॥ सूर्य-
स्तेजोनिधिर्देवि चंद्रमा तारकेश्वरः ॥ ४ ॥ वा-
युश्च बलवान् लोके वरुणो यादसांपतिः ॥ कु-
बेरोऽपि धनाध्यक्षो धर्मराजो यमः स्मृतः ॥ ५ ॥
यद्धृत्वा सहसा विष्णुः संहरिष्यति दानवान् ॥

जघान रावणादींश्च किं वक्ष्येऽहमतःपरम् ॥ कव-
चस्यास्य सुभगे कथितोऽयं मुनिः शिवः॥ ६ ॥
त्रिष्टुपछंदो देवता च लक्ष्मीनारायणो मतः॥ रमा
बीजं परा शक्तिः तारं कीलकमीश्वरि ॥ ७॥ भो-
गापवर्गसिध्यर्थं विनियोग इति स्मृतः॥ पूर्णेंदुव-
दनं पीतवसनं कमलासनम् ॥ ८ ॥ लक्ष्म्या-
श्रितं चतुर्बाहुं लक्ष्मीनारायणं भजे ॥ ॐ वासु-
देवोऽवतु मे मस्तकं सशिरोरुहम्॥ ९ ॥ ह्रीं ल-
लाटं सदा पातु लक्ष्मीविष्णुः समंततः ॥ ह्रौं नेत्रे-
वताल्लक्ष्मीगोविंदो जगतां पतिः ॥ १० ॥ ह्रीं ना-

सां सर्वदा पातु लक्ष्मीदामोदरः प्रभुः ॥
श्री मुखं सततं पातु देवो लक्ष्मीत्रिविक्रमः॥ ११॥
लक्ष्मी कंठं सदा पातु देवो लक्ष्मीजनार्द्दनः ॥
ॐ उं इं ईं पातु वक्षो ऊं लक्ष्मीत्रिपुरेश्वरः॥ १२॥
ॐ ऊं ऋं ॠं पातु कुक्षिं ह्रीं लक्ष्मीगरुडध्वजः ॥
ऌं ॡं एं ऐं पातु पृष्ठं ह्रौं लक्ष्मीनृसिंहकः॥ १३ ॥
ॐ अं अं अः पातु नाभिं ह्रीं लक्ष्मीविष्टरश्रवाः ॥
कं खं गं घं गुदं पातु श्रीलक्ष्मीकैटभांतकः ॥
॥ १४ ॥ चं छं जं झं पातु शिश्नं लक्ष्मीलक्ष्मी-
श्वरः प्रभुः ॥ टं ठं डं ढं कटिं पातु लक्ष्मीनारायणः

स्वयम् ॥ १५ ॥ तं थं दं धं पातु चोरू नमो लक्ष्मी-
जगत्पतिः ॥ पं फं बं भं पातु जानू ॐ ह्रीं लक्ष्मी-
चतुर्भुजः ॥ १६ ॥ यं रं लं वं पातु जंघे ह्सौं ल-
क्ष्मीगदाधरः ॥ शं षं सं हं पातु गुल्फौ ह्रीं श्रीं-
लक्ष्मीरथांगभृत् ॥ १७ ॥ लं क्षं पादौ सदा पातु
वह्निर्वह्नौ सदा तथा । यमो मां दक्षिणे पातु नै-
र्ऋत्यां निर्ऋतिश्च माम् ॥ १८ ॥ वरुणः पश्चिमे पा-
तु वायव्यां पातु मां मरुत् ॥ उत्तरे धनदः पाया-
दैशान्यामीश्वरोऽवतु ॥ १९ ॥ वज्रशक्तिदंडख-
ड्गपाशयष्टिध्वजांकिताः ॥ सभूताः सर्वदा पातु

दिग्गीशाः परमार्थदाः ॥ २० ॥ अनंतः पात्वधो
नित्यमूर्ध्वं ब्रह्मावताच्च माम् ॥ दशदिक्षु सदा
पातु लक्ष्मीनारायणः प्रभुः ॥ २१ ॥ प्रभातेऽवतु
मां विष्णुर्मध्याह्ने वासुदेवकः ॥ दामोदरोऽवता-
त्सायं निशायां नरसिंहकः॥२२॥संकर्षणोऽर्द्धरात्रे
ऽव्यात्प्रभातेऽव्यात्त्रिविक्रमः॥ अनिरुद्धः सर्वकालं
विष्वक्सेनश्च सर्वतः ॥ २३ ॥ रणे राजकुले द्यूते
विवादे शत्रुसंकटे ॥ अं ह्रीं ह्सौं ह्रीं श्रीं मूलं ल-
क्ष्मीनारायणोऽवतु ॥ २४ ॥अं अं अं रणराज-
चौररिपुतः पायाच्च मां केशवः ॥ ह्रीं ह्रीं ह्रीं हहहा

ह्सौं हस ह्सौवहेः सदामाधवः ॥ ह्रीं ह्रीं ह्रीं जलप-
र्वताग्रभयतः पायादनंतो विभुः॥ श्रीं श्रीं श्रीं शशा-
शालकं प्रतिदिनं लक्ष्मीधवः पातु माम् ॥ २५ ॥
इतीदं कवचं दिव्य वज्रपंजरकाभिधम् ॥ लक्ष्मी-
नारायणस्येष्टं लक्ष्मीनारायणप्रदम् ॥२६॥ सर्व-
सौभाग्यनिलयं सर्वसारस्वतप्रदम् ॥ लक्ष्मीसंव-
ननं तत्वं परमार्थरसायनम् ॥ २७ ॥ मंत्रगर्भं
जगत्सारं रहस्यं त्रिदिवौकसाम् ॥ दशवारं पठे-
द्रात्रौ रतांते वैष्णवोत्तमः ॥ २८ ॥ स्वप्ने वरप्रदं
पश्येल्लक्ष्मीनारायणं सुधीः ॥ त्रिसंध्यं यःपठेन्नि-

त्यं कवचं मन्मुखोदितम् ॥ २९ ॥ स याति परमं
धाम लक्ष्म्याश्च वैष्णवोत्तमः ॥ महाहीनपद-
स्थोपि यः पठेदात्मचिंतकः ॥ ३० ॥ आनंदघूर्णि-
तः पूर्णं लभेन्मोक्षं ससाधकः ॥ गंधाम्नकेण वि-
लिखेद्द्रवौ भूर्जे जपेन्मनुम् ॥ ३१ ॥ पीतवस्त्रेण संवे-
ष्ट्य सौवर्णेनाथ वेष्टयेत् ॥ धारयेद्गुटिकां मूर्ध्नि
लक्ष्मीनारायणं स्मरन् ॥ ३२ ॥ रणेऽरिपून्विजि-
त्वाऽऽशु कल्याणी ग्रहमाविशेत् ॥ वंध्या वा काक-
वंध्या वा मृतवत्सा च यांगना ॥ ३३ ॥ सा ब-
ध्नीयात् कंठदेशे लभेत्पुत्रं चिरायुषम् ॥ गुरूपदे-

शतो धृत्वा गुरुं ध्यात्वा मनुं स्मरन् ॥ ३४ ॥
वर्णलक्षपुरश्चर्यां फलमाप्नोति साधकः ॥ बहुनो-
क्तेन किं देवि कवचस्यास्य पार्वति॥३५॥विनाने-
न न सिद्धिः स्यान्मंत्रस्यास्य महेश्वरि॥सर्वागमर-
हस्याढ्यं तत्वात्तत्वं परात्परम् ॥३६॥ अभक्ताय
न दातव्यं कुचैलाय वरानने ॥ दीक्षिताय कुली-
नाय स्वशिष्याय महात्मने ॥ ३७ ॥ महाचीन-
पदस्थाय दातव्यं कवचोत्तमम् ॥ गुह्यं गोप्यतमं
देवि लक्ष्मीनारायणप्रियम् ॥ ३८ ॥ वज्रपंजरकं
चैव गोपनीयं स्वयोनिवत् ॥ ३९ ॥ इति श्रीरुद्र-

यामले तंत्रे श्रीदेवीरहस्ये लक्ष्मीनारायणकव-
चाख्यानं नाम अष्टात्रिंशः पटलः ॥
॥ श्रीपरमात्मने नमः ॥ श्रीभैरव उवाच ॥ अधुना
कथयिष्यामि विद्यां नामसहस्रकाम् ॥ भोगदां
मोक्षदां लोके लक्ष्मीनारायणस्य ते ॥ १ ॥
॥ देव्युवाच ॥ दिव्यं च करुणांभोधे लक्ष्मीनारा-
यणस्य मे॥ भोगापवर्गदं दिव्यं वद नामसहस्रकम्
॥ २ ॥ सर्वमंत्रमयं तत्वं सर्वपूजाफलप्रदम् ॥
सर्वागमरहस्याढ्यं सर्वदेवैकवंदितम् ॥ ३ ॥
भैरव उवाच॥एतद्रहस्यं परमं मंत्रनामसहस्रकम्

लक्ष्मीनारायणस्येष्टं सर्वस्वं तत्वतो मम ॥ ४ ॥
गुह्यं गोप्यतमं देवि सुखदं धर्मवर्धनम्॥ लक्ष्मीसं-
वननं लोके परमं परमार्थदम् ॥५॥ महाचीनपद
स्थानां कौलिकानामभीष्टदम् ॥ उपपातकपा-
पानां शमनं दमकारकम् ॥ ६ ॥ सर्वतीर्थफलो-
द्रिक्तं सर्वयज्ञफलप्रदम् ॥ अवाच्यं मार्गहीना-
नामश्राव्यं दुष्टचेतसाम् ॥ ७ ॥ वैष्णवः कौलिकः
श्रेष्ठः पठेन्नामसहस्रकम् ॥ गुरूपदेशतो देवि स-
र्वसिद्धिमवाप्नुयात् ॥ ८ ॥ ॐ अस्य श्रीलक्ष्मी-
नारायणनामसहस्रस्य शिवऋषिः ॥ त्रिष्टुप्छंदः॥

श्रीलक्ष्मीनारायणो देवता ॥ श्री बिजं ॥ ह्रीं शक्तिः
कीलकं ॥ धर्मार्थकाममोक्षार्थै जपेविनियोगः ॥
ॐलक्ष्मीविष्णुरीशानो लक्ष्मीकांतो विनायकः॥
विश्वंभरो विश्वनाथो विश्वसूर्विश्वसूदनः ॥ १ ॥
लक्ष्मीराजो महात्मा च परमात्मा परात्परः ॥
अपारविभवो भव्यो भवभूतिमयो भवः ॥ २ ॥
लक्ष्मीध्रुवो महालक्ष्मीदेवो लक्ष्मीभवोत्तमः ॥
लक्ष्मीधराधरो लक्ष्मीधराधरसमद्युतिः ॥ ३ ॥
विश्रुतो विकलो व्यग्रो विलासी गीतवल्लभः ॥
विद्याधरप्रियो विद्यावादी विद्याविशारदः ॥ ४ ॥

पद्माढ्यः पाटलद्योतिः पीतपटधरो भगः ॥ आग्य-
वान् भोगहो भर्गौ भृगुभाववविवर्द्धनः ॥५ ॥ ल-
॥२९॥ क्ष्मीकौलेश्वरो लक्ष्मीगुल्यो लक्ष्मीविभावसुः ॥
लक्ष्मीविश्वेश्वरो लक्ष्मीधन्यो लक्ष्मीविभाकरः ॥
॥ ६ ॥ अचिंत्यो नित्यसंयोगी संयमी यमभीति-
हृत् ॥ यामिनीशप्रियकरो राहुध्वंसविषापहः ॥७॥
धीरो भयहरो भीमो भीमास्यो भीमवल्लभः ॥
हारी कंकणभूषाढ्यो मौलिमान्नूपुरार्चितः ॥ ८ ॥
किंकिणीरवसंतुष्टो वंशीवादनतत्परः ॥ स्थाणु- ॥२९॥
रूपश्चरगतिश्चारुवक्त्रो नयानयी ॥ ९ ॥ लक्ष्मी-

विनयवांल्लोके जयवांल्ललितागतिः ॥ लक्ष्मीनेत्र-
वशी लक्ष्मीहास्यवश्यो विनर्त्तकः ॥१०॥ नाट्य
प्रियो नटो नर्त्ती सर्वभृत्सर्वसारभृत् ॥ वासवो
गोप्यमार्गेष्टो वैष्णवाचारतत्परः ॥११॥ आत्मा
परात्मा ज्ञानात्मा लोकाध्यक्षः सुरेश्वरः ॥ सत्यः
स्तुत्यः शुचिर्नित्यो नित्यात्मा नित्यदर्शनः ॥१२॥
पंचनादमयो नांतपंचमाचारवल्लभः ॥ पंचमस्वर
संगीतकीर्तिदो मोहनाशनः ॥ १३ ॥ लक्ष्मीपरः
पुमांल्लक्ष्मीशक्तिभृद्भक्तितोषितः ॥ लक्ष्मीयोगी-
श्वरो लक्ष्मीवसुलक्ष्मीमनोहरः ॥ १४ ॥ अचिं-

त्यमहिमाचिंत्यगरिमा घोरनिःस्वनः ॥ सुखी
सुखप्रदो दिव्यरूपो देवेश्वरेश्वरः ॥ १५ ॥ काम-
देवो वैद्यवैद्यो वेदविद्वेदनायकः ॥ ऋग्रूपः साम-
गीतज्ञो यजुर्यज्ञभुजांपतिः ॥ १६ ॥ यज्ञको य-
मिनां त्राता त्रिलोकजनकोऽजरः ॥ कामदः का-
मिनीवरः कमनीयाकृतिः कुरुः ॥ १७ ॥ लक्ष्मी-
पृथुवसुप्रीतो लक्ष्मीश्रीदः श्रियः पतिः ॥ लक्ष्मी-
कामो लक्ष्मणेशो लक्ष्मीरामोऽतिसुंदरः ॥१८॥
अनिवर्ती च निःसंगो निर्भयो निरुपद्रवः ॥ नि-
राभासो निराधारो निर्लेपो निरहंकृतिः ॥ १९ ॥

निराश्रयो निर्गुणश्च गुणातीतो गणेश्वरः ॥ ब्रह्म-
स्वरूपो ब्रह्मज्ञो बृंहणो ब्रह्मवर्द्धनः ॥ २० ॥ म-
हाक्रतुर्यज्ञवपुर्वराहो यज्ञनाशकः ॥ महारुद्रो
महादेवो माधवो मधुसूदनः ॥ २१ ॥ लक्ष्मी-
निरंजनो लक्ष्मीसिद्धिदः सिद्धिवर्धनः ॥ लक्ष्मीश्री-
वत्सवक्षाश्च लक्ष्मीकौस्तुभभूषितः ॥ २२ ॥ सर्व-
लोकधरो दांतो दंती दंतायुधो दमी ॥ अप्रमेय-
गतिः शांतः शमी कामी कृतागमः ॥ २३ ॥ म-
हाकर्मा महावीरो मकारशिवपूजितः ॥ वाममा-
र्गरसोद्रिक्तः सर्वाचारैकमध्यगः ॥ २४ ॥ मांसा-

हारी नित्यसंगी मीनासवरसाकुलः ॥ मुद्राप्रियो
रतानंदरतो रतिपतिप्रियः ॥ २५ ॥ अघोरदेवो
दैत्यारिर्जितदेवो दिवाकरः॥ निशानाथोऽमृतम-
यो नवग्रहसमर्चितः॥ २६ ॥ मत्स्यरूपो विरू-
पाक्षो विभाकरशतप्रभः ॥ निग्रहो विग्रही
वासो वारान्निधिनिवासकः ॥ २७ ॥ पीतबाहुः
स्थूलपादो दीर्घचक्षुरलंभुजः ॥ पादामृतक्र-
मातीतः सत्यसंधः सनातनः ॥ २८ ॥ लक्ष्मीस-
नातनो लक्ष्मीधर्माध्यक्षो धनेश्वरः॥ लक्ष्मीधन
प्रदो लक्ष्मीधर्मभागी च धर्मवान् ॥ २९ ॥ वी-

॥३१॥

रहा पुंडरीकाक्षः पद्मनाभो जगत्प्रभुः॥ पद्मासनो
ब्रह्ममयो विस्मयी विगतस्मयः॥ ३० ॥ समानः
समदृष्टिश्च विषमो विषमेक्षणः॥ चतुर्मूर्तिस्त्रिमू-
र्त्तिश्च चिंतिताश्चिचणीपतिः॥ ३१ ॥ सहस्रबाहुः
क्षेत्रेशो ब्राह्मणो वणिजांपतिः ॥ सर्वव्यापी
सर्वमुखः सर्वमध्यगतः सखा ॥ ३२ ॥ चक्रा-
र्चितो नक्रपतिर्वरुणश्च कृशोदरः ॥ दर्पहा सर्प-
शयनः सर्पासनवरप्रदः ॥ ३३ ॥ अमानी मा-
नदो मान्यो मानवेंद्रो मनूत्तमः॥ मनुवंशोमखा-
ध्यक्षो लक्ष्यो लोकैकरक्षकः॥३४॥शोकहा दुर्गहन्त-

ल. पं. श्च वलिहा कलिनाशनः॥ शुभांगो मदिराक्षीबः सह.
शुभः कृष्णो भवाकृतिः॥ ३५॥ अतिथिस्तिथिना-
॥३२॥ थश्च नक्षत्रपरिवेशगः॥चतुर्भागश्चतुश्रोत्रो विश्व-
वाग् विलयप्रदः॥३६॥प्रलयांतकरः प्राज्यो जन-
नीजनकप्रियः॥ यशस्वी श्रीधरः शांतः शंकाश-
तविनाशकः ॥ ३७ ॥ अक्रूरवदनः क्रूरकी-
रवाग्बाणनायकः ॥ सुवर्णमुकटो मारो मारसू-
र्मणिभूषणः ॥ ३८॥ मांत्रिको मंजुलो मंत्री मां-
त्रिकेष्टवरप्रदः॥ लक्ष्मीविलासकोलक्ष्मीसुंदरो बं- ॥३२॥
धुरोऽभयः॥३९॥ अजितः सखितस्तार्त्तस्तार्तीयः

शुभकृच्छ्रुभः ॥ लक्ष्मीपद्मधरो लक्ष्मीचंद्रहासो
विकस्वनः ॥ ४० ॥ लक्ष्मीगोवर्द्धनधरो लक्ष्मी-
कंबुधरो विराट् ॥ स्कंदाश्रयो रिपुध्वंसी देवसेना-
दिनायकः ॥ ४१ ॥ अनुकूलोऽनकूलश्च सानुमा-
न्सोमसुंदरः ॥ तामसः सात्विकः सत्यसोमरा-
जो मरीचिमान् ॥ ४२ ॥ अर्चिष्मान्विकलः कु-
ल्याकल्पः सज्जनपोषकः ॥ विराजो वामनो वे-
णुर्वानरो वारिवाहनः ॥ ४३ ॥ वाल्मीकिवरदो
वंद्यो वंध्यो बंधूकसन्निभः ॥ वर्णेश्वरो वर्णमाली
वनमाल्यतिसुंदरः ॥ ४४ ॥ भृगुर्भास्वद्वपुर्भोक्ता

कर्त्ता हर्त्ता शतक्रतुः ॥ अतुल्यः कोमलः कोश-
रमणो मणिकुंडलः ॥ ४५ ॥ लक्ष्मीकेयूरबाँहु-
क्ष्मोमणिदामविराजितः ॥ लक्ष्मीनूपुरबाँहुलक्ष्मी-
मुक्तामाल्यविभूषणः ॥ ४६ ॥ लक्ष्मीगोधांगुलि-
त्राणो लक्ष्मीकंकणभूषण; ॥ लक्ष्मीविराजितो
लक्ष्मीविविधाभरणोज्वलः ॥ ४७ ॥ ककारादि-
क्षकारांतविद्याभूषणभूषितः ॥ अकाराक्षरस्फी-
तोच्चनिःशेषः स्वरमंडितः ॥ ४८ ॥ वर्णमान्यो
महाविद्यो मातृकाक्षरतत्ववान् ॥ लक्ष्मीकामे-
श्वरो लक्ष्मीकामुको निर्जरेश्वरः ॥ ४९ ॥ कला-

वान् कीर्त्तिमान् कर्ता कुंभांडप्राणहारकः ॥ कं-
सांतकः कालसूक्ष्म कारकः कष्टहा बली ॥ ५० ॥
क्रीतकुब्जः कंबुधरः कलकंठः कुलालकः ॥ कु-
लाध्यक्षः कुलाचारः कुलाकुलपदार्चितः ॥ ५१ ॥
करकंजः कर्त्तरीसः कतकः कर्त्तरीकरः ॥ कलंक-
रहितः कोकः कोकशोकनिबर्हणः ॥५२॥ कपिलः
कलशी कोलः कौलिकाकुलमानसः॥लक्ष्मीकुला-
कुलं लक्ष्मीकुलजः कर्मवर्द्धनः ॥ ५३ ॥ लक्ष्मी-
काशीश्वरो लक्ष्मीनवनाथविनायकः ॥ लक्ष्मीक-
निष्ठो निश्यिष्टो लक्ष्मीयोगेंद्रयोगदः ॥ ५४ ॥ ख-

ल. पं. पंरः खेटगामी च खलांतकस्वरूपधृक् ॥ खगरूपः सह.
॥३४॥ खेचरश्च खनित्रः खेटनायकः ॥ ५५ ॥ खमायुधः
खंडधारी खंजनेक्षणभंजनः॥खरध्वंसी खरारावी
खर्वराकारभीषणः ॥ ५६ ॥ खंखलोलः खगमतिः
खेचरेश्वरसेवितः ॥ खेचरीगणसेवी च खंडमुद्रा-
नियंत्रितः ॥५७॥ खड्गहस्तः खड्गपालः खेटः खर्व-
णभूषणः ॥ लक्ष्मीखेशः खोकरूपो लक्ष्मीभास्वर-
मूर्तिमान् ॥ ५८ ॥ लक्ष्मीखड्वांगमल्लक्ष्मीखेचरः
खाश्मरीप्रियः ॥ लक्ष्मीभूतप्रदो लक्ष्मीज्योति- ॥३४॥
ष्मानक्षरांचितः ॥ ५९ ॥ लक्ष्मीगीतस्वरालापी

गोपतिर्गोकुलेश्वरः ॥ गंगाधरप्रियो गोष्ठी गो-
पालो गंधवर्द्धनः ॥ ६० ॥ गंधवाहप्रियो गीतो
गीतज्ञो गीतलालसः ॥ गुंजाहारप्रियो गोडी
गुरुर्गोवाहनो गवः ॥ ६१ ॥ गांभीर्यवान् गुरु-
तरो गुरुशब्दविवर्द्धनः ॥ गुरुभक्तिप्रियो गोली
गंडशैलनिवासकः ॥ ६२ ॥ गजनादो गोत्रपतिर्गो-
लमार्गप्रियंगवान् ॥ निरंगो गजवक्रेशो गणनाय-
कनायकः ॥ ६३ ॥ गंधर्वनाथवरदो गगनेश्वरपूजि-
तः ॥ गर्भहीनो गर्भवाही गुणेयो गुणसागरः ॥ ६४ ॥
गुणातीतवपुर्गुण्यो गुप्तमार्गप्रवर्त्तकः ॥ गुप्तमंत्र

प्रियो गोप्यो गुह्यो गुह्यकवल्लभः ॥ ६५ ॥ गो-
पितो गिरिनाथश्च गिरिधारी जगन्निधिः॥ लक्ष्मी
॥२५॥ प्रियश्च सुप्रीतो लक्ष्मीगरुडवाहनः ॥ ६६ ॥ ल-
क्ष्मीकपोतनिलयो लक्ष्मीकल्पद्रुमो रविः॥ लक्ष्मी-
संतानकः सारो लक्ष्मीसारो लतापतिः ॥ ६७ ॥
लक्ष्मीग्राह्यो सुलक्ष्मा च लक्ष्मीसागरनंदनः ॥
घृणी घृणामयो घृष्टो घुश्टणारक्त ईश्वरः ॥ ६८ ॥
घृणामयोऽघहर्त्ता च घृणानाथो घवर्णभाक् ॥
लक्ष्मीचिंतामणिःसाधुर्लक्ष्मीवीरो वरोत्तमः॥६९॥ ॥२५॥
लक्ष्मीचतुर्भजो लक्ष्मीविश्वनाथो विनायकः ॥

ङवर्णो ङेन्तरूपश्च ङानङ्गो ङोणरूपवान् ॥७०॥
ङवर्णरूपो विश्वेशो ङकाराक्षरमंडलः ॥ लक्ष्मी-
सेव्यो निर्गुणात्मा लक्ष्मीशानशिवार्चितः ॥७१॥
चारुरूपश्चारुगतिश्चारुमूर्त्तिश्चमत्कृतिः ॥ चारुने-
त्रश्चारुमुखश्चारुबाहुश्चतुर्भुजः ॥ ७२ ॥ चारुह-
स्तश्चारुनखश्चारुकेशश्चमूपतिः ॥ सितावासिच-
रश्चोलश्वेतांबरधरोऽच्युतः ॥ ७३ ॥ चारुहासश्चा-
रुदंतश्च्यवनश्चंद्रवासितः ॥ चंद्रश्चंद्रकलानाथश्चा-
रुपादश्चतुर्गतिः ॥ ७४ ॥ चतुरात्मा चतुर्थात्मा
चतुर्भूमिधरोधरः ॥ चतुःसमुद्रशयनश्चतुःसागर-

ल. पं. लंघनः ॥ ७५ ॥ चारुद्युतिश्चतुःशय्या चतुर्वीर- सह.
वरोवरः ॥ चतुर्वेदमयो वैद्यश्चार्वंगश्चारुभूषणः
॥३६॥ ॥ ७६ ॥ चतुर्वक्रश्चतुर्वक्रपूजितः परमेश्वरः ॥
चलच्चंद्रकशोभाढ्यश्चलन्नूपुरकूजितः ॥ ७७ ॥
चलत्कनककेयूरश्चलत्कांचनकुंडलः ॥ चलत्कन-
कश्रृंगाभश्चलत्कनकशेखरः ॥ ७८ ॥ चकाररूप-
श्चारेशश्चकरार्णविभूषणः ॥ लक्ष्मीशानो महाद-
क्षो लक्ष्मीपीतांबरः पतिः ॥७९॥ छत्री छत्रधर-
श्छात्रश्छिन्नमस्ताप्रियः पिता ॥ छिन्नच्छेदी ॥३६॥
छिन्नमुखश्छकारांबररूपवान् ॥ ८० ॥ लक्ष्मी-

कांतः कांतियुक्तो लक्ष्मीसाधक ईश्वरः ॥ जग-
न्नाथो जगद्धर्ता जगत्कर्त्ता जगत्पतिः॥ ८१ ॥
जगत्क्षयकरो जेता जगतांपतिरुत्तमः ॥ जग-
त्स्वामी जयत्राता जगत्संहारकारकः ॥८२॥ जी-
वात्मा परमात्मा च जगद्भूतिप्रदो भवः ॥ जग-
द्गुणो जगत्सत्यो जगदानंददायकः ॥८३॥ जग-
त्संतोषभूतात्मा जगत्क्रोधदयान्वितः ॥ जगद्दी
प्तिकरो देवोपासितो जगदीश्वरः ॥ ८४ ॥ जवी
जवान्वितो जारो जगदाडंबरप्रदः॥ जामाताजल-
पर्यंको जटामुकुटमंडितः ॥ ८५॥ जितारिर्जयदो

जेयो जयवृद्धिरतापनः ॥ लक्ष्मीकुचतटासीनो
लक्ष्मीनयनगोचरः ॥ ८६ ॥ झलबीजोत्कृतो झंडी
झुंडीशठीप्रतापनः ॥ झंकारीझंकृतिर्झिल्लीरवो झं-
कारिनूपरः ॥८७॥ लक्ष्मीवरो महालक्ष्मीसेवितो
देवविवंदितः ॥ झंकारो झारलो झेशो झवर्णामृतरू-
पवान् ॥ ८८ ॥ लक्ष्मीस्वभूः स्वर्गगतिर्लक्ष्मीवंद्यो
विधुंतुदः ॥ टाकारो टंकहस्तश्च टांतो टीत्कारकू-
जितः ॥ ८९ ॥ लक्ष्मीदेवो देवदेवो लक्ष्मीदांतः
कृपानिधिः ॥ ठकुरो ठालुको ठास्यो ठवर्णः
सुपुमान्निधिः ॥ ९० ॥ लक्ष्मीविधुर्वितर्काक्षो

वैनतेयध्वजोद्यमः ॥ डमरुर्डामरेशानो डका-
राक्षरसंयुतः ॥ ९१ ॥ लक्ष्मीपतिः पीवरांगो
लक्ष्मीनायकनायकः ॥ ढकारवाक् ढकाभेद्यो-
ढकासुरनिषूदनः ॥ ९२ ॥ लक्ष्मीजेता जयकरो
लक्ष्मीशो लक्ष्ममूर्द्धजः ॥ लक्ष्मीजगत्स्थितो
लक्ष्मीशोऽरिलक्ष्मीगदाधरः ॥९३॥ णांतो णवर्ण
कोणेशो णवर्णामृतसाधितः ॥ लक्ष्मीदामोदरो
लक्ष्मीप्राणो लक्ष्मीरथांगभृत् ॥ ९४ ॥ तुल्यो
तुल्यमहातुल्यचितस्तारार्णमंडितः ॥ तोतुलस्तु-
लसीनाथस्तंत्रज्ञो मंत्रनायकः ॥ ९५ ॥ तपःफ-

ल. पं. लप्रदस्ताम्ररूपस्तुल्यपराक्रमः ॥ त्रुटिरूपस्त्रुटिग- सह.
तिस्तपस्वी तापसप्रियः ॥ ९६ ॥ तुहिनांशु
॥३८॥ स्तुहिनजस्तुषारकरशोभितः ॥ तुरीसेव्य स्तुला-
भश्च तकाराक्षरमंडनः॥ ९७ ॥ लक्ष्मीशंखायुधो
लक्ष्मीनंदकीर्तिश्च वर्णभृत् ॥ स्थविरः स्थूलगात्र-
श्च स्थाणुसेव्योऽथ शब्दकृत् ॥ ९८ ॥ स्थालीरस-
प्रियः स्थूलस्थकारेश्वर ईश्वरः॥ लक्ष्मीजीवेश्वरो
लक्ष्मीधरो लक्ष्मीनृसिंहकः ॥ ९९ ॥ दयावान्
भूपतिर्दक्षो घूतो दंभविवर्जितः ॥ दरिद्रहा ॥३८॥
दुःखहर्त्ता दौर्भाग्यक्षयकृद्दयी ॥ १०० ॥ दीनो

दीनप्रभुर्दंभी दयितोदयवांछितः ॥ दानकृद्दान-
फलदो दनुजेंद्रक्षयंकरः ॥ १ ॥ दारप्रियो दीर्घ-
नखो दुष्टसूदनिषूदनः ॥ देवो देवयशो वंद्यो
दकारासुरमंडितः ॥ २ ॥ लक्ष्मीदयाकरो लक्ष्मी-
देवो लक्ष्मीदयानिधिः ॥ धनकृद्धनहृद्धन्यो धने-
शश्च धनप्रदः ॥ ३ ॥ धृतिमान्धर्मवान्धर्मो धर्म-
कर्मविचक्षणः ॥ धर्माध्यक्षो धनाध्यक्षो धवलो
धीरवान् धनी ॥ ४ ॥ धीरो धैर्यकरो धर्मदक्षो
धनदपूजितः ॥ लक्ष्मीधनी महालक्ष्मीधवो
लक्ष्मीमनोभवः ॥५॥ नवीनो नूतनो नम्रो नटनो

ल. पं. नाट्यतोषितः ॥ नागो नागनगश्रेष्ठो नृगम्यो ना- सह.
गमंडनः ॥६॥ नृसिंहो नृवरोऽनंतो नरनारायणो-
॥२१॥ ऽनवः ॥ नागराजो नागपतिर्नागांतकध्वजोनलः
॥ ७ ॥ नागारूढो निम्ननाभिर्नंदिसेव्यो नरेश्वरः ॥
नलिनाक्षो नृवंद्योपि नायको नागनायकः ॥
॥ ८ ॥ नर्मदातीरक्रीडाकृन्नलिनीपतिलोचनः ॥
नरेशो नृपपूज्यश्च नागशायी नगोत्तमः ॥ ९ ॥
नारायणो निष्कलंको नवर्णाकृतिरात्मवान् ॥
लक्ष्मीनागो नगधरो लक्ष्मीशयो नृरूपवान् ॥ ॥२१॥
॥ ११० ॥ पुष्पप्रियः पुष्पशय्याशयानः पुष्पशेख-

रः ॥ पुष्पधन्वा प्रद्युम्नश्च सुपुष्पपुष्पपूजितः॥ ११॥
पूज्यः पावयिता चैव परमेष्ठी पितामहः ॥ परंपदं
परंपुण्यं परमायुः परात्परः ॥ १२ ॥ पारावा-
रसुताभर्त्ता परमेशः परंमहः ॥ पुण्यदः पुण्य-
कृत्पूतः पुराणागमपूजितः ॥ १३ ॥ पुराणपुरुषः
पीनः पीनवक्षो जितेंद्रियः ॥ पीतवासाः पीत-
मालः पीतवर्णः परांकुशः ॥१४॥ पत्रगो त्रिश्रुतः
पाथः पाथिकः पांथतोषदः ॥ पूर्वपूर्वजनैस्तुत्यः
पर्वणः स्वर्णमंडनः ॥ १५ ॥ लक्ष्मीपीतांबरो-
लक्ष्मीपीतो लक्ष्मीपरस्परम् ॥ फणं फणीवरः

ल. पं. स्फीतः फलकृत् फलदः फली ॥१६॥ फणिशय्या- सह.
शयानश्च फकारामृतमंडनः॥ बालको बुद्धिमा-
॥४०॥ न्बौधो बंधुर्बांधव ईश्वरः॥ १७ ॥ लक्ष्मीबंधुरल-
क्ष्मीबांधवो लक्षणान्वितः ॥ भद्रपदो भास्वरां-
गो भास्करो भानुरव्ययः॥ १८ ॥ भानिधिर्भग-
वान् भासो भीतिहा भयदायकः ॥ लक्ष्मीभय-
हरो लक्ष्मीभयदो भयघातनः॥ १९ ॥ महेश्वरो
महामान्यो महामायो मनोरमः ॥ मनोहारि
महाशांतो महातेजो मनोजवः ॥ १२० ॥ ॥४०।
महोत्साही माधवश्च मायाधारी मनोन्मनः ॥

मानदोऽसुरघाती च मानवेष्टफलप्रदः ॥ २१ ॥
मदिरामोदमुदितो मारमोहविवर्जितः ॥ लक्ष्मी-
महोदयो लक्ष्मीमान्यो लक्ष्मीमदालसः ॥ २२ ॥
यशोदानंदनो यांतो यशस्वी याधसैनकः ॥ य-
शोधरो यमो योगी योगीनां योगदायकः ॥ २३ ॥
योगेंद्रो यागपूज्यश्च यादवो यादवेश्वरः ॥ यज्ञ-
प्रीतो यज्ञनिधिर्याज्ञिको याज्ञिकप्रियः ॥ २४ ॥
यज्वा यज्वप्रियो यातो यकाराक्षररूपवान् ॥
लक्ष्मीयज्ञकरो लक्ष्मीयाज्ञिको यज्ञसेवितः ॥ २५ ॥
राजा रमापतिर्देवो रामो राजा रजोरजः ॥ राज-

ल. पं. सो रात्रिकृद्रामो रामानंदप्रदायकः ॥ रेवती- सह.
रमणो राकापतिःसर्वकलाधरः॥ २६ ॥ लक्ष्मी-
॥४१॥ रामो महालक्ष्मीराजा लक्ष्मीत्रिविक्रमः ॥ ला-
क्षारुणो लीतराक्षो ललज्जिठ्हो लतापतिः ॥
॥ २७ ॥ लंकेशो लास्यको लांतो लंबोदरप्रि-
यापरः ॥ लक्ष्मीलीनोऽलिवर्णो योलकाराक्षर
ईश्वरः ॥ २८ ॥ वांतदो वीरसेनानीर्वराहो वि-
ग्रहो विराट् ॥ विष्णुर्वसुंधरानाथो वसुधोवसु-
धाधिपः ॥ २९ ॥ वागीश्वरो वेणुहस्तो वेतालो ॥४१॥
विरमो वियत् ॥ विद्वान् विशालनयनो विकारो

विकृतिः पुमान् ॥ १३० ॥ वितर्की विनयी विद्या
राजमान्यो विचारकः ॥ वाग्मी वानीरमूलस्थो
वाचालो वीरनायकः ॥ ३१ ॥ लक्ष्मीवराहो
र्वरीशो लक्ष्मीवीरो वनेचरः ॥ शंकरः श्रीधरः
श्रीलः श्रीमी शीतांशुलोचनः ॥ ३२ ॥ शशमौ-
लिः श्यामलांगः शंभुशंखनिषूदनः॥ शक्रशत्रुक्ष-
यकरो दैत्यशत्रुकरः शिवः॥ ३३ ॥ लक्ष्मीशिवः
श्रीपतिः श्रीवरो लक्ष्मीशिवप्रदः ॥ षोडशाक्ष-
ररूपश्च षोडशार्णविभूषणः ॥ ३४ ॥ षडंगवि-
द्यावेत्ता च षकारस्वरशोभितः ॥ लक्ष्मीषडंग-

धारी च लक्ष्मीषोडशवर्णभृत् ॥ ३५ ॥ सुंदरः
॥४२॥ स्वर्गवसितः सर्वेशः सर्वतोमुखः ॥ सप्तसप्तिः
सदाचारः साधुः साधुजनप्रियः ॥ ३६ ॥ सरलः
सरलः सारसुखी सुखविवर्द्धनः ॥ सप्तद्वीपवती-
नाथः सप्तसागरनायकः ॥ ३७ ॥ सप्तस्वरमयः
सप्तसप्तपातालवासकः ॥ सात्विकः सत्वसंपन्नः
समस्तदुरितापहः ॥ ३८ ॥ सप्तसप्तरिपुध्वंसी स-
मस्तासुरघातनः ॥ समस्तपातकध्वंसी समस्तसु-
रवंदितः ॥ ३९ ॥ लक्ष्मीसनातनो लक्ष्मीसनकः ॥४२॥
साधुपूजितः ॥ हरिर्हरो हरिहरो हाटकेशो हठा-

पहः ॥१४०॥ हरिद्रवर्णो हसितो हारी हरितलो-
चनः ॥ लक्ष्मीहरो हृषीकेशो लक्ष्मीहारधरोऽनघः
॥ ४१ ॥ लक्ष्मीक्षमापतिः क्षत्ता क्षमेशः क्षरव-
र्णभाक् ॥ क्षणकृत् क्षणदानाथः क्षमावान् क्षु-
भितासुरः ॥ ४२ ॥ लक्ष्मीक्षमायुतो लक्ष्मीक्षतो
लक्ष्मीक्षवर्णभृत् ॥ अनंतो नंदिपूज्यश्च त्याद्दिरा-
दित्यसंनिभः ॥ ४३ ॥ इंदिरावल्लभो देव ईश्वर-
श्चोग्ररूपवान् ॥ ऊष्मोज्ज्वलोपि ऋणहा ऋका-
रोज्वलमातृकः ॥ ४४ ॥ लृवर्णवर्णो लृकार एन-
वर्णसमन्वितः ॥ ऐश्वर्यसहितः श्रेष्ठो तथोन्मत्त-

 



स्वरार्चितः॥४५॥ ॐ ह्रीं ह्सौं ह्रीं श्रीदेवो लक्ष्मी-
नारायणः शिवः ॥ इति मंत्रमयं नाम्नां सहस्रं त-
त्वमव्ययम् ॥ ४६ ॥ अकारादिक्षकारांतविद्यानि-
लयमीश्वरम् ॥ सर्वतीर्थमयं सर्वदेवदानवपूजि-
तम् ॥ ४७ ॥ अश्वमेधसहस्राणि वाजपेयस्य
कोटयः॥ चांद्रायणायुतं देवि महादानान्यनेकशः
॥ ४८ ॥ मंत्रनामसहस्रस्य कलां नार्हंति षोड-
शीम् ॥ अर्धरात्रे पठेद्वीरः शक्तिवक्षस्थितः शनैः
॥ ४९ ॥ स्वप्ने लक्ष्मीप्रियं देवं वरदं सोऽपि प- 
श्यति ॥ महाचीनार्चनं कृत्वा पठेद्वीरार्चनं सकृत्

॥ १५० ॥ शतवर्षसहस्राणि पूजायाः फलमाप्नु-
यात् ॥ एकवारं पठेद्यस्तु संपूज्य गुरुसंनिधौ ॥
॥ ५१ ॥ सभवेत्साधकः श्रीमान् सपुत्रस्त्रिदिवं
व्रजेत् ॥ पुण्यदं वरदं नित्यं तीर्थसाधनमुत्तमम्
॥ ५२ ॥ योगिनां योगदं पुण्यं भोगिनां भोगव-
र्धनम् ॥ रोगिणां रोगशमनं सर्वदुष्कृतनाशनम्
॥ ५३ ॥ वैष्णवानां प्रियतरं मुक्तानां परमार्थ-
दम् ॥ अश्रोतव्यमदातव्यमन्यशिष्याय पार्वति
॥ ५४ ॥ विना दानं न गृह्णीयान्न दद्याद्दक्षिणां
विना ॥ दातृग्रहीत्रोरुभयोः सिद्धिहानिर्भवेद्ध्रु-

 वम् ॥१५५॥ इदं नामसहस्रं तु लक्ष्मीनारायणस्य 
ते ॥ तव भक्त्या मयाख्यातं गोपनीयं स्वयोनि-
 वत् ॥ १५६ ॥ इति श्रीरुद्रयामले देवीरहस्ये तं-
त्रलक्ष्मीनारायणसहस्रनामकाख्यानं नामैकोन-
चत्वारिंशः पटलः ॥ ३९ ॥
श्रीपरमात्मने नमः ॥ भैरवउवाच ॥ अद्याहं
तत्त्वसर्वस्वं रहस्यं परमार्थदम् ॥ मंत्रस्तोत्रं प्रव-
क्ष्यामि लक्ष्मीनारायणस्य ते ॥ पंचमांगं महादेवि
त्यानंदरसकारणम् ॥ १ ॥ ॐ अस्य श्रीलक्ष्मी- 
नारायणस्तोत्रराजस्य शिवऋषिः त्रिष्टुप्छंदः ॥

श्रीलक्ष्मीनारायणो देवता श्रींबीजं । ह्रीं शक्तिः ।
ॐ कीलकं। मम भोगापवर्गसिध्यर्थे स्तवपाठे वि-
नियोगः ॥ पूर्णेंदुवदनं पीतवाससं कमलासनम् ॥
लक्ष्म्याश्रितं चतुर्बाहुं लक्ष्मीनारायणं भजे ॥ १ ॥
किरीटिनं कुंडलहारमंडितं पद्मासनं श्याममुखं
चतुर्भुजम् ॥ पीतांबरं शंखगदाब्जपाणिनं पुराण-
मीशं पुरुषं भजे विभुम् ॥ २ ॥ प्रणवो यदि मा-
नवो जपेद्धरिपादांबुजसेवनाकुलः ॥ दनुजांतक-
धाम याति नूनं परमानंदमथो गतस्मयः॥ ३ ॥
परावीजं नित्यं यदि जपति जंतुर्भुवि तदा स्मरा-

कांतः स्मार्त्तागमकुटिलमार्गोऽसि गतभीः॥ भवे-
त्कौलेशानः सकलरिपुदावाग्निजलदः सुरस्त्रीभिः
सार्द्धं सुरविटपवाटीषु रमते॥ ४॥ विंबीजं वै म-
हामंत्रं जपेदानंदवर्द्धनः ॥ आनंदरूपो भविता
लक्ष्मीनारायणप्रियः ॥ ५॥ विभूतिबीजं मनु-
राजतत्वं जपेद्व्रतांते यदि कौलिकेंद्रः॥ स याति
देवासुरपूजितांघ्रिः परं पदं सर्वसुरैरलभ्यम्॥६॥
मांबीजमन्त्रः परमार्थतत्वं सत्वैकरूपं मनसा ज-
पेद्यः॥ स कामिनीकामरणप्रवीणो भवेदरीणा-
मुरुदर्पहारी ॥७॥ रमाबीजं नामाक्षरपदमयं मं

त्रमुकुटं जपेद्यो यंत्रोग्रं हरिचरणपद्मार्पितमनाः ॥
भवेद्भूभृन्मौलिस्फुरितमणिमालानिवहनात् ॥ प्र-
भाभास्वत्पादः स धरणिधरेंद्रो विजयवान् ॥ ८ ॥
नारायणायेति जपेन्मनुं यो रात्रौ प्रभाते परमा-
र्थबीजम् ॥ स्ववैरिदावानलवारिवाहो भवेत्स
गीर्भिर्गुरुगर्वहारी ॥ ९ ॥ विश्वं जपेद्यो हृदि वि-
श्वसारं विश्वंभरध्यानपरः प्रभाते ॥ साम्राज्यल-
क्ष्मीः स रिपून्विजित्य लभेद्भुवि स्वर्गमतः परासुः ॥
॥ १० ॥ चतुरस्रवृत्तषोडशारं वसुपत्रं चितका-
स्रकामबिंदौ ॥ कमलाश्रितमीश्वरं दिविस्थं पर-

मानंदमयं भजाम्यनंतम् ॥ ११ ॥ इति मंत्रमयं
पठेत्स्तवं निशि मोदयुतः प्रभातकाले ॥ कम-
ला विमलाशयस्य तस्य श्रुतिशीलस्य वशी-
भविष्यति ॥ १२ ॥ इतीदं स्तोत्रमीशानि मूल-
मंत्रमयं परम् ॥ तव भक्त्या मयाऽऽख्यातं न चा-
ख्येयं मुमुक्षुभिः ॥ १३ ॥ पंचांगमिदमाद्यंतं ल-
क्ष्मीनारायणस्य ते ॥ वर्णितं गौप्यमर्च्याढ्यं गो-
पनीयं स्वयोनिवत् ॥ १४ ॥ श्रीदेव्युवाच ॥ भग-
वन्सर्वतत्वज्ञ सर्वलोकहिते रत ॥ क्रीताऽस्मि भव
भावेन कथनेनाऽस्य शंकर ॥ १५ ॥ लक्ष्मीनारा-

॥४६॥

यागस्याद्य श्रुत्वा पंचांगमुत्तमम् ॥ ममाद्य पर-
मानंदो दास्यहं ते ब्रवीमि किम् ॥ १६॥ भैरवउ-
वाच ॥ एतद्रहस्यमखिलं सर्वतंत्रेषु गोपितम् ॥
वेदानालोड्य तंत्रांश्च देवि ते कथितं मया ॥१७॥
देवानां दुर्लभं तत्वं पंचांगं वैष्णवार्चितम् ॥ रहस्यं
सर्वलोकानां सर्वस्वं मम पार्वति ॥१८॥ अप्रका-
श्यमवक्तव्यमदातव्यं दुरात्मने ॥ देयं शिष्याय
शांताय गुरुभक्तिरताय च ॥ १९ ॥ दानशीलाय
भक्ताय कौलमार्गरताय च ॥ महाचीनपदस्थाय
वैष्णवाय महात्मने ॥२०॥ दत्वा मुक्तिं भजेद्देवि

 भक्तानां सिद्धिदायिनीम् ॥ इतीदं परमं तत्त्वं त- 
 त्त्वात्तत्त्वं परात्परम् ॥ २१ ॥ गुह्यं गोप्यं गोप-
नीयमित्याज्ञा परमेश्वरि ॥ २२ ॥ इति श्रीरुद्रया-
मले देवीरहस्ये तंत्रे लक्ष्मीनारायणाख्यानं च-
त्वारिंशः पटलः ॥ ॥ इति श्रीलक्ष्मीनारायण-
पंचांगं समाप्तम् ॥ ॥ श्रीरस्तु ॥ ॥



ब्राह्मणादिवर्णक्रमानुसार सविस्तर वर्णित है. और अद्यावधि अप्राप्त सर्वोत्कृष्ट श्रीगोपालकवचभी इसके अंतमें संग्रथित किया गया है. हमने ऐसे सर्वसाधारणोपयोगी गुह्यातिगुह्य इन दोनों पुस्तकोंका अपार परिश्रमसे प्राप्त कर अपने अनुग्राहक ग्राहकोंकी सेवामें यथोचित मूल्य लेकर निवेदन करनेके उद्देशसे प्रकाशित किया है. जिससे सर्व साधारणका बहुत कुछ उपकार होना सम्भव है. अतएव जिनको ऐहिक तथा आमुष्मिक सौख्यविधायिनी उत्तम सन्ततिकी कामना हो वे इसके संग्रह करनेमें कदापि न चूकें. किंमत. ४ आणे ट० ॥ आ०

## पुस्तक मिलनेका ठिकाना--

## हरिप्रसाद भगीरथजी

### कालकादेवीरोड़, रामवाड़ी--मुंबई.

इदं पुस्तकं मोहमय्याख्यनगर्यां भगीरथात्मज हरिप्रसादेन "गणपत कृष्णाजी" मुद्रणालये मुद्रापितम् । एतत्पुस्तकस्य मुद्रणं अब्दयक्षिव स्विलामिते शाके १८२३ कार्तिककृष्ण ५ समाप्तिमगमत् ॥

पुस्तक मिलनेका ठिकाना.

हरिप्रसाद भगीरथजीका पुस्तकालय.

ठि०—कालकादेवीरोड़—

रामवाड़ी—मुंबई.

